६। अयि व्रजवनेश्वरी! स्वतनुमाधुरीसारभू,
स्त्वमेव माधुराभिधप्रणयसारवारांनिधिः।
अयि द्विजमहेन्द्र! प्रणयिलक्षदक्षाग्रणि,
गदाधर मयि प्रभो कुरु कृपाकटाक्षच्छटाम्।।
७। स्तुवन्ति युवयोर्गुणान् श्रुतिगणाः किमन्ये पुन,
र्युवां नहि विदांवराः श्रुतिविदाम्वराश्चक्रिये।
नयन्त्यसि जनान् बहुस्वसुखभक्तिसंसेवने,
गदाधर मयि प्रभो कुरु कृपाकटाक्षच्छटाम्।।
८। विचित्रित सुखास्पदं भवभयार्त्तिसंत्रासनं,
भवत्पदयुगं कदा रचयति स्वभाग्योदयम्।
इदं हि मम मानसं भजति दुःखमेवानिशं,
गदाधर मयि प्रभो कुरु कृपाकटाक्षच्छटाम्।।

---

अयि व्रजेश्वरी! तव उपमा ना हय । स्वीय तनु माधुर्य्येर तुमिइ आश्रय ।।
मधुर रसेर येइ सुधार्णव हय । तुमिइ एकमात्र ताहा जानिह निश्चय ।।
ओहे प्रभो! मिश्र पुरन्दर नन्दनेर । दश लक्ष प्रणयिर तुमि अग्रसर ।।
हेन प्रभो ! गदाधर निवेदन मोर । करुणा कटाक्षच्छटा मम प्रति कर ।।
ओहे गौरगदाधर तोमादेर गुण । श्रुतिस्मृति शास्त्र सब करये स्तवन ।।
अतः शास्त्रज्ञेते याँरा वेदज्ञ प्रधान । ताँरा तोमादेर स्तव ना करिवे केन ?
ओहे प्रभो! जीवे कर हेन भक्ति दान। श्रेष्ठानन्द पाय करि याहार सेवन।।
हेन प्रभो! गदाधर निवेदन मोर । स्वकृपाकटाक्षच्छटा मम प्रति कर ।।
ओहे गदाधर तव चरण कृपायँ । कबे हबे मोर हेन सौभाग्य उदय ।।
नानाविध सुखास्पद हबे ये कृपाते । भयंकर आर्त्तित्रास याइबे दूरेते ।।
आमार मनेते सदा इहाइ जागय । कतदिने हेन दुःख दूरेते पलाय।।
ओहे प्रभो! गदाधर निवेदन मोर । करुणा कटाक्षच्छटा मम प्रतिकर ।।

९। इमां हरिरतिप्रदां रसविदां रसैकास्पदं,
पठत्यपि मुहुः सुधाझरकरान्वितां य स्तुतिम्।
अभिन्नमतिता हरेः स्फुरति तस्य लीलाद्वये,
प्रयच्छति गदाधरो हि कुञ्जसेवामपि।।

*इति श्रीभूगर्भ गोस्वामि विरचितं श्रीश्रीगदाधराष्टकं समाप्तम्।।*

एइ स्तुति हय सदा हरिरतिप्रद । रसविद्‌जनेर हय रसेर आस्पद ।।
इहा हैते सुधा सदा हयत क्षरण । हेन स्तुति येइजन करये पठन ।।
व्रजलीला गौरलीला हरि ये करय । ताहाते अभिन्न मति से जनार हय ।।
गदाधर ताँर प्रति सन्तोष हइया । निज कुञ्ज सेवा देन हरषित हैया ।।

।।समाप्त।।

# श्रील श्रीराधागदाधराष्टकम् (पृथ्वी छन्दः ८-९)

१। कलिन्दनगनन्दिनी, तटनिकुञ्जपुञ्जेषु य,
स्ततानवृषभानुजा, कृतिरनल्पलीलारसम्।
* निपीय व्रजमङ्गलो, यमिह गौररूपोऽभवत्,
स मे दिशतु भावुकं प्रभु गदाधरः श्रीगुरुः।।

कलिन्द नगरे यिहाँ तनया विदित । ताँर तीरे निकुंजेर पुंज शत शत ।।
श्रीवृषभानुनन्दिनी स्वरूपे तथाय । बहुबिध लीलारस प्रकाश करय ।।
याहा पान करि से मङ्गलमय हरि । नवद्वीपे प्रकट हैल गौररुप धरि ।।
हेन प्रभु गदाधर श्रील गुरुवर । सर्वदा कुशल मोर उपदेश कर ।।

* यदा तीव्रप्रयत्नेन हंयोगादेरगौरवम्।
न छन्दोभङ्‌गमप्याहुस्तदा दोपाय सुरयः।।

२।　अदभ्रविषयाटवीगहनकुञ्जपुञ्जेचरं,
त्वरस्विकरपङ्कजो य इह राजमार्गेऽनयत्।
जनं करुणावारिधि र्धरणीमण्डले मादृशं
स मे दिशतु भावुकं प्रभु गदाधरः श्रीगुरुः।।

३।　रहःकुजनमण्डलीहरिघटाशटाधुननै,
रतीव भयभाग् जनं तमनुसर्पनेनाश्वपात्।
चकर्त्त निगड़ं द्रुतं स्वजनगेहरूपञ्च यः,
स मे दिशतु भावुकं प्रभु गदाधरः श्रीगुरुः।।

४।　अनन्तगुणकीर्त्तने सदपि गौररूपप्रभोः,
प्रभुर्भवति यः स्वयं विविधभावभाभासितः।
निमज्जयति यो जनान् भजनजह्नु कन्याजले,
स मे दिशतु भावुकं प्रभु गदाधरः श्रीगुरुः।।

---

सुघोर विषय रूप अटवी कान्तारे । अति गहन निकुंज पुंजेर भितरे ।।
ताहा विचरणशील मादृश ए जन। व्यग्रहस्त भक्तिमार्गे टानि आनिलेन।।
से हेन दुर्गम स्थाने पतित आमारे। करुणा वारिधि प्रभु करिल उद्धारे ।।
हेन प्रभु गदाधर श्रीलगुरुवर। सर्व्वदा कुशल मोर उपदेश कर ।।
खल कुजनमंडली सिंह समूहेर । केशर कंपन द्वारा अति भयंकर ।।
ताहा देखि भयभीत ये जन हय । ताँर पीछे याआ शीघ्र ताँहाके राखय ।।
स्वजन गृहादि दृढ़ लौह वेड़ी हय । कृपा करि यिहोँ ताहा शीघ्र काटि देय ।।
हेन प्रभु गदाधर श्रीलगुरुवर । सर्व्वदा कुशल मोर उपदेश कर ।।
याँहार विविध गुणेर सीमा नाहि हय । हेन श्रील शचीसुत जगते कहय ।।
ताँर गुणावली यिहोँ करिते कीर्तन । विविध भावच्छटाते शोभित हयेन ।।
प्रभु एत दयालेर शिरोमणि । पतित जनारे भक्ति गङ्गाते डुबाय ।।
श्रीलगुरुवर हेन प्रभु गदाधर । आदेश करुन मोर याहा श्रेयकर ।।

५। हरिर्नटनचातुरीं सरसिकुञ्जपुञ्जाग्रजा,
ममन्दमदनासवैः स्वजनमण्डलोन्मादिकाम्।
इति स्फुटतरां गिरं वदति लज्जितः स्वेषु यः,
स मे दिशतु भावुकं प्रभु गदाधरः श्रीगुरुः।।
६। प्रभो कठिनशेखरस्त्वमसि वेद्मि तत्वं तव,
यदा भ्रमसि कानने रहसि देव! मामत्यजः।
उदार्य (इतीर्य) गिरमुन्नतां तपति वेपते यः स्वयं,
स मे दिशतु भावुकं प्रभु गदाधरः श्रीगुरुः।।
७। प्रभो तपननन्दिनी जलविहारं लालायितं,
रहस्मृतिपथं कथं क्व स वनाय नायाति ते।
उदीर्य (इतीर्य) गतचेतनो भवति प्रभोरग्रतो यः,
स मे दिशतु भावुकं प्रभु गदाधरः श्रीगुरुः।।

---

राधाकुण्ड कुञ्जपुञ्ज अग्रभागे स्थित। प्रेमोन्मत्त हैया राधा ये करिल नृत्य ।।
अत्यन्त चातुरी ताहे प्रकाश हइल । याहा देखि सखीगण उन्मादिनी हैल ।।
हेन कथा सखी मध्ये श्रीकृष्ण बलिल। ताहा शुनि यिहौं अति लज्जित् हइल।।
श्रीलगुरुवर हेन प्रभु गदाधर । आदेश करुन मोर जाहा श्रेय कर ।।
ओहे प्रभु तुमि हओ कठिन शेखर । भालरूपे तवतत्व ज्ञात ये आमार ।।
मने करि देख रासे एकाकिनी मोरे।
फेलिया लुकाइले तुमि वने अति घोरे।।
एइमतं उच्चैस्वरे बलिया बलिया । तापित अन्तरे कहे काँपिया काँपिया ।।
श्रीलगुरुवर हेन प्रभु गदाधर। आदेश करुन याते मोर श्रेय कर ।।
ओहे प्रभु तुमि ये एकान्ते लीला कैले । राधार से जलकेलि स्मरण हइले।।
प्रेम वैचित्रि भावेते समीपे तोमार। बल केन ना आइल प्राणनाथ मोर।।
एइमत उच्चैस्वरे बलिया बलिया। प्रभुर अग्रेते पड़े अचेतन हैया ।।
श्रीलगुरुवर हेन प्रभु गदाधर । आदेश करुन मोर जाहा श्रेयस्कर ।।

८। अनल्पहरिकीर्त्तने हरति चित्तवित्तं बलात्,
तमस्तुतिनिकृन्तने भवति चण्डरोचिश्च यः।
प्रतप्ततनुसेचने शिशिरवारि पुरो हि यः।
स मे दिशतु भावुकं प्रभु गदाधरः श्रीगुरुः।।

इति श्रीपरमानन्दभट्टाचार्य गोस्वामिविरचितम्,
श्रीश्रीराधागदाधराष्टकं स्वाङ्गी कुर्व्वन्तु वैष्णवाः।
*श्रीपरमानन्दगोस्वामीकृत श्रीश्रीराधागदाधराष्टकं समाप्तम्।*

---

कृष्णनाम अतिशय ये करे कीर्त्तन । बलेते ताहाँर मन हरये ये जन ।।
जीवेर अज्ञानतम करिवारे दूरे । यिहाँ हय अतिचण्ड किरण सूर्येर ।।
अति तापित शरीर सिंचन विषये । यमुनार सुशीतल जल यिहाँ हये।।
श्रीलगुरुवर हेन प्रभु गदाधर । करुन आदेश मोरे याहा हितकर ।।
परमानन्द गोस्वामिकृत स्तोत्र हन । वैष्णवगण सदाय करुन पठन ।।

।। समाप्त ।।



# श्रीगदाधरगौराङ्गोपासनातत्व सन्दर्भ

# श्रीगदाधरगौराङ्ग लीलामृत—

श्रीविश्वनाथ चक्रवर्ती ठाकुर रचित श्रीगौराङ्गलीलामृत धृत श्रीलोचनदास कृत निम्न तीन पदों में श्रीगदाधर प्रभु का अति संक्षेप में तत्व, महिमा, उनके भजन से गुण एवं अनादर से दोष व्यक्त हुआ है—

## प्रथम पद—

जय जय गदाधर गौराङ्ग सुन्दर। एक आत्मा प्रकट भाव दुइ कलेवर।।
वृन्दावने राधाकृष्ण नवयुवद्वन्द्व । इदानीं प्रकट गदाधर गौरचन्द्र ।।
महाभाव स्वरूपा राधा वृन्दावनेश्वरी । सेइ एइ गदाधर पण्डितावतारी।।
रसराजमय मूर्त्ति व्रजेन्द्रनन्दन । सेइ एइ गौरचन्द्र पूर्ण प्रकटन ।।
रागानुगामार्गे ये भजिते साध करे। पंडित गोसाञिर शिष्यगण अनुसारे।।
ए सवार अनुगा विना व्रज प्राप्ति नाइ। अतएव ताँर शिष्य व्रजेर गोसाञि।।
याँर लागि लक्ष्मी देवी अन्तर्म्मना हैया। अद्यावधि तप करे ताँहार लागिया।।
तथापि ना पाय सेइ व्रजेन्द्र नन्दन। तिहीँ याँर प्रेम वश हय अनुक्षण ।।
सेइ राधा हय एइ पण्डित गोसाञि । गौर प्रेम सुधारस पाइ याँर ठाँइ ।।
अतएव ताँरे येवा हय रति हीन । प्रेम भक्ति नाहि ताँर हय महादीन ।।
इहातेओ येइजन ना करे विश्वास।कोटि जन्मे नाहि त्राण ताँर सर्व्वनाश।।
गदाधर गौराङ्ग पदे एइ निवेदन । से सकल सङ्ग येन ना हय कथन ।।
पाषण्ड आलाप सङ्ग सेइ मोर भाल। पण्डित निन्दुक सङ्ग सेइ मोर शेल।।
मदीरा सेवन मोर चिते यदि भाय। तथापि ताँहार सङ्ग भय लागे गाय।।
गदाधर गौराङ्ग पदाम्बुज करि आश। चरणेशरण मागे ए लोचन दास।।

## द्वितीय पद

गदाधर गदाधर गदाधर आशे । गदाधर गाइ येन व्रजपुर वासे ।।
गदाधर नाम लैया हइव उदासीन। खाइव करङ्गे जल परिव कौपीन।।
एइ से मनेर आशा हय बहुदिने। गदाधर गौर प्रेम शुनिब श्रवणे ।।
सेइ गुरु सेइ शिष्य तोमाके ये जाने। तोमा छाड़ि भक्ति करे चक्षुहीन जने।।
गदाधर पादपद्मे एइ अभिलाष। चरणे शरण मागे ए लोचन दास।।

## तृतीय पद–

भक्त भज मन, माधव नन्दन, गदाधर याँर नाम ।
ताँहार चरण, ये करे शरण, सेइ याय व्रजधाम ।।
बहु सखा सङ्गे, कुतूहल रङ्गे, सेवि सुखी कैल श्याम ।
पूर्वे व्रजपुरे, वृषभानुघरे, धरिया राधिका नाम ।।
एवे गौर सङ्गे, अवतरि रङ्गे, हइला वैरागी वेश ।
नीलाचले आसि, भक्तसङ्गे वसि, तारिला अनेक देश ।।
से प्रेम पाथारे, जगत साँतारे, ताप गेल सब नाश ।
प्रेमेर सायरे, ना देखे पामरे, कहे ए लोचन दास ।।

---

## श्रीगदाधर प्रभु का आविर्भाव लीला (पाहिड़ी)

### श्रीनरहरि सरकार कृत ।

धन्य धन्य बलि येन, चारि युग मध्ये हेन, कलिर भाग्येर सीमा नाइ ।
सुन्दर नदीयापुरे, माधव मिश्रेर घरे, कि अद्भुत आनन्द बाधाइ।।

वैशाखेर कुहुदिने, जनमिला शुभक्षणे, गौराङ्गेर प्रिय गदाधर ।
श्रीमाधव रत्नावती, पुत्र मुख देखि अति, उल्लासे अधैर्य निरन्तर ।।
किवा गदाधर शोभा, सवार नयन लोभा, येन कत आनन्देर धाम ।
झलमल करे वर्ण, जिनिया से शुद्ध स्वर्ण, सर्वाङ्ग सुन्दर अनुपम।।
देखिते आइसे लोक, पाशरिया दु:ख शोक, परस्पर कहे कुतूहले।
माधव मिश्रेर भाग्य, हैल हेन पुत्र लभ्य, ना जानि कतेक पुण्य फले।।
विप्रपत्नीगण आसि, आनन्द सागरे भासि, रत्नावती माये प्रशंसिया।
देखिया सोनार सुते, धान्य दुर्व्वा दिया माथे, आशिर्वादकरे हर्ष हैया।।
गदाधर प्रभावेते, विविध मङ्गल याते, वन्दिगण करे धाओया धाइ।
नरहरि कहे येन, जनमे जनमे हेन, गदाइ चाँदेर गुण गाइ ।।



## (श्रीगदाधर प्रभु के लीला का संक्षेप में वर्णन)

आमोर करुणावान, अनाथ जनार प्राण, गदाधर पंडित गोसाञि ।
जगतेर चित्तचोरा, गोकुल नागर गोरा, याँर रसे उल्लास सदाइ ।।
याँर मुख निरखिया, भूमे पड़े मुरछिया, तिलेक धैरज नाहि माने ।
जलकेलि पाशासारि,फागु खेला आदि करि, कीर्त्तने नर्त्तन याँर सने।।
गदाधर प्रभु गुणे, दिवानिशि नाहि जाने, सुखेर सायरे सदा भासे ।
प्रभुर मनेते याहा, समय बुझिया ताहा, योगायेन रहि प्रभु पाशे ।।
एकदिन शचीमाता, ताम्बूल अर्पणे तथा, देखि गदाधरेर प्रताप ।
धरिया गदाइ हाते, कहे निमाञिर साथे, सतत रहिवे मोर वाप ।।
गौराङ्ग गमन यथा, गदाधर चले तथा, तिलेक छाड़िते नारे सङ्ग ।
श्रीवास अद्वैत मने, कत सुख क्षणे क्षणे, देखि गौरा गदाधर रङ्ग ।।
गदाइ गौराङ्ग अङ्गे, चन्दन लेपये रङ्गे, मालतीर माला दिया गले ।

ना जानि कि करे हिया, प्राणनाथे निरखिया,भासे दुटि नयनेर जले।।
प्रभुर शयन घरे, शय्यार रचना करे, शयन करिले गौरा राय।
गदाइ समीपे शुञा, पूर्व्व कथामृत दिया, कत भाव उथले हियाय।।
गौराङ्ग गोकुल शशि, ए हेन आनन्दे भासि, नवद्वीपे करिया विहार।
जानाइया गदाधरे, पुरुव प्रेमेर भरे, करिल सन्न्यास अङ्गीकार।।
श्रीकेशेर अदर्शने, ये हैल गदाइ मने, ताहा के कहिवे एक मुखे।
नीलाचले प्रभु सहे, गिया गोपीनाथ गृहे, वास नियमित सेवा सुखे।।
तथा प्रभु महासुखे, पण्डित गोसाञिर मुखे, शुनेन श्रीभागवत कथा।
से कथा अमृत पाने, धारा बहे दुनयने, किवा से अद्भुत प्रेम प्रथा।।
प्रभु नीलाचल हैते, श्रीगौड़ मण्डल पथे, गमन करिते वृन्दावने।
गदाइर निर्व्वन्ध याहा, सेइक्षणे छाड़ि ताहा, चले निज प्राणनाथ सने।।
गौरगदाधर दोँहे, से समय याहा कहे, ताहा शुनि केवा धैर्य धरे।
कतना शपथ दिया, गदाधरे फिराइया, चले प्रभु कातर अन्तरे।।
गदाइ 'गौराङ्ग' बलि, काँदे दुइ बाहु तुलि, भूमे पड़े मुरछित हैञा।
सार्व्वभौम आदि यत, गदाधरे कहि कत, नीलाचले चले यत्ने लैया।।
गदाइर व्याकुल प्राण, ना भाय भोजन पान, बहे वारि नयन युगले।
के वुझे एप्रेम धारा, कतेक दिवसे गोरा,आसिया मिलिला नीलाचले।।
पराण नाथेरे पाञा, गदाइ आनन्द हिया, विच्छेद वेदना गेल दूरे।
आहा मरि मरि भाइ, भुवने उपमा नाइ, गदाइर गुणे के ना झुरे।।
प्रभु नित्यानन्द भाले, याँर लागि नीलाचले, आनिला तण्डुल गौड़ हैते।
गदाधर पाक कैल, भक्षणे ये सुख हैल, ताहार तुलना नाइ दिते।।
नित्यानन्द विमुखेरे, गदाइ देखिते नारे, से ना देखे गदाइ विमुखे।
कहे दास नरहरि, गाओ गाओ मुख भरि, ए हेन गदाइ गुण सुखे।।

# श्रीगदाधर प्रभु के अङ्गों के सौन्दर्य व माधुर्य का वर्णन

(यथाराग)

गदाधर परम सुघर रसधाम।

रुचिर गौरतनु, तनुरुचि रुचिकर, तछु निरमञ्छन करु कत काम(ध्रु)।।

ओ मुख कमल, कमलवन विजित, सुचारु मकरन्द सदृश मृदु हासि।

घन घन नयन, चषक भरि भरि परि, पीयत हिओ मधि अधिक उल्लासि

ओ मृदु मधुर, वचन रचना नव, निन्दित जग वशीकरण सुमन्त्र।

शुनत लुवध श्रुति, श्रुतिवाञ्छत बहु, विसारित वेदश्रवण श्रुति तन्त्र।।

पुरुव चरितचित, चिन्तिअथिर धृत, गति विरहित अतिशय सुखे भासि।

दूरे रहु हेम, प्रेम निरुपम वर, नरहरि गुपत वेकत हेरि हासि।।

(वेलोयार)जय जय श्रील, गदाधरपण्डित, मण्डित भावभूषण अनुपाम।

श्रचैतन्य अभिन्न, शकति गुणनाम, धन्य सुदुर्गम यछु रसधाम।।

किये विधि जगजन दुरगति जानि।

श्रीवृन्दावन, मधुर भजन धन, सम्पद सार मिलायल आनि।। (ध्रु)

गर गर गौर, प्रेम भरे झर झर, अरुण करुण वरुणालय आँखि।

क्षणेके स्तबध, शबद क्षणे गद गद, आध आध पद गोपीनाथ भाखि।।

नव अनुरागी, लागि रह अन्तर, ऊथलये क्षणे नव जलधि तरङ्ग।

दास शिवाइ, आओइ क्षीण दीनजन,ना पाओल सतत असत पथ रङ्ग।।

• • • • • • • • • • • • • • • • • • • • • • • • • • • • • •

  

# श्रीश्रीराधामाधव-स्तवः

जय कृष्ण कृपामय कल्पतरो, गुण गौरव विश्रुत विश्वगुरो।
मयि देहि दृशं भव दुःख सहे, जय यादव माधव केशव हे।।१।।
शिखि वर्ह विभूषित मौलिवर, मुनिमानस मोहन मूर्त्तिधर।
चिर केलि पर व्रजभूमि रुहे, जय यादव माधव केशव हे।।२।।
जगदीश्वर! नश्वर विश्वहितं, तव भास्वर रूपमिदं विहितम्।
हृदयं व्यथितं भवतो विरहे, जय यादव माधव केशव हे।।३।।
व्रजवालक लालन कृत्य पटो, निज गोधन पालन दक्ष वटो।
कृत रक्षण भीषण दावदहे, जय यादव माधव केशव हे।।४।।
यमुना ह्रद शोधन तीव्र विषाद्, व्रज जीवन ताण्डव दण्ड मिषात्।
चरणप्रद नाग फणा निवहे। जय यादव माधव केशव हे।।५।।
गिरिराज तटे घृतदान महे, धृत हेम घटे रमणी निवहे।
कृत कौतुक! केलि कला कलहे, जय यादव माधव केशव हे।।६।।
तुलसीदल चन्दन माल्य मयैर्दयितालि विनिर्मित वेशचयैः।
परिशोभित! रम्य निकुञ्ज गृहे, जय यादव माधव केशव हे।।७।।
मधुराधर हास्य सुधा सदनं, मुरलीवर वादन कृद् वदनम्।
आलमादन! तद्गत गन्धवहे, जय यादव माधव केशव हे।।८।।
जय राधिकयाश्रित वामतनो, हत दर्पदशा मतनो रतनोः।
रमणी मणि मण्डित रासमहे, जय यादव माधव केशव हे।।९।।
चरणाम्बुज-मर्पय दीनपते, करुणा कणया मम मन्दमतेः।
शिरसि प्रणते सितकेश-वहे, जय यादव माधव केशव हे।।१०।।
इति दीन विनोद कृत स्तवनैर्निज चित्त विनोद कृद् वचनैः।
रतिरस्तु भवच्चरणाम्बुरुहे, जय यादव माधव केशव हे।।११।।

***नित्यधामगत-प्रभुपाद-श्रील विनोद विहारी गोस्वामि विरचित***
***श्रीश्रीराधामाधव-स्तवः समाप्तः।***

।। श्रीश्रीगौरगदाधरौ जयतः ।।

# श्रीमद् रघुनाथदासगोस्वामि विरचिता

# मनःशिक्षा

गुरौ गोष्ठे गोष्ठालयिषु सुजने भूसुरगणे
स्वमन्त्रे श्रीनाम्नि ब्रजनवयुवद्वन्द शरणे।
सदा दम्भं हित्वा कुरुरतिमपूर्व्वामतितरा-
मये स्वान्तभ्रान्तश्चटुभिरभियाचे धृतपदः ।।१।।
न धर्म्मं नाधर्म्मं श्रुतिगण निरुक्तं किलकुरु
व्रजे राधाकृष्ण प्रचुर परिचर्य्यामिह तनु।
शचीसूनुं नन्दीश्वर पति सुतत्वे गुरुवरं
मुकुन्द प्रेष्ठत्वे स्मर परमाजस्त्रं ननु मनः ।।२।।

---

हे मन! मैं तुम्हारे चरणों में विनम्र प्रार्थना कर रहा हूँ कि तुम सर्वथा दम्भ को छोड़कर श्रीगुरुदेव, श्रीव्रजधाम, व्रजवासिवृन्द, सज्जनवृन्द, वैष्णव, ब्राह्मणवृन्द, निजमन्त्र, श्रीहरिनाम एवं व्रज के नवकिशोर युगल श्रीराधाकृष्ण के पास आत्मसमर्पण करके उन सबके प्रति अनुराग कर॥१॥

श्रुतिवृन्द वर्णित धर्म, अधर्म के प्रति सन्तुष्ट न होना, श्रुतिवृन्द परम उपादेय, सर्वश्रेष्ठ रूप से जिसका चरम सिद्धान्त किये हैं उस राधाकृष्ण की परिचर्या एकान्त रूप से कर। श्रीशचीनन्दन को नन्दीश्वर पति श्रीनन्द महाराज के पुत्र मानकर एवं श्रीगुरुदेव को श्रीकृष्णप्रेष्ठ रूप से निरन्तर चिन्तन कर॥२॥

यदीच्छेरावासं व्रजभुवि सरागं प्रतिजनु-
युवद्वन्द्वं तच्चेत् परिचयितुमारादभिलषेः।
स्वरूपं श्रीरूपं सगणमिह तस्याग्रजमपि
स्फुटं प्रेम्णा नित्यं स्मर नम तदात्मं शृणु मनः।।३।।

असद्वार्त्ता वेश्या विसृजमति-सर्व्वस्वहरणीः
कथा मुक्तिव्याघ्र्या न शृणु किल सर्व्वात्मगिलनीः।
अपि त्यक्त्वा लक्ष्मीपतिरतिमितो व्योम नयनीं
व्रजे राधाकृष्णौ स्वरति-मणिदौ त्वं भज मनः।।४।।

असच्चेष्टा कष्टप्रद विकट पाशालिभिरिह
प्रकामं कामादि प्रकट पथपाति व्यातिकरैः।।
गले बद्ध्वाहन्येऽहमिति वकभिद्वर्त्मपगणे
कुरु त्वं फुत्कारानवति स यथा त्वं मन इतः।।५।।

---

मन! यदि तुम व्रजभूमि में अनुराग के साथ निवास करना चाहते हो, एवं साक्षात् रूप से मधुर श्रीराधाकृष्ण युगल की सेवा करना चाहते हो, तो सुनो! तुम इसी जीवन में ही श्रीस्वरूप गोस्वामी प्रभु, सपरिकर श्रीरूप सनातन प्रभु का स्मरण सदा प्रेम से कर॥३॥

मन! विवेक अपहारिणी असत् कथा रूपिणी वेश्या को तुम परित्याग करो। मुक्ति वार्त्ता रूपी समस्त ग्रास करने वाली शेरनी की कथा कभी भी न सुनना। तुम वैकुण्ठेश्वर श्री नारायण की भक्ति को भी त्यागकर इस व्रजभूमि में निज प्रेमदाता श्री राधाकृष्ण का भजन कर॥४॥

मन! संसार के प्रकट पथ में आक्रमणकारी काम, क्रोध आदि आसक्ति वर्ग, अनित्य विषय चेष्टारूप दुःखद भयङ्कर डोरी से गले में बाँधकर मुझे मार रहे हैं, इसलिए श्रीकृष्ण भक्ति मार्ग रक्षक वैष्णवों को जोर-जोर से बुलाओ, वे सब इन शत्रुओं से तुम्हारी रक्षा करेंगे॥५॥

अहे चेतः! प्रोद्यत् कपट कुटिनाटीभरखर-
क्षरन्मूत्रे स्नात्वा दहसि कथमात्मानमपि माम्।
सदा त्वं गान्धर्व्वा गिरिधर-पद-प्रेम-विलसत्-
सुधाम्भोधौ स्नात्वा स्वमपि नितरां माञ्च सुखय।।६।।
प्रतिष्ठाशाधृष्ट्याश्वपचरमणी मे हृदि नटेत्
कथं साधुः प्रेमा स्पृशति शुचिरेतन्ननु मनः।
सदा त्वं सेवस्व प्रभु दयित सामन्तमतुलं
यथा तां निष्काश्य त्वरितमिह तं वेशयति सः।।७।।
यथा दुष्टत्वं मे दवयति शठस्यापि कृपया
यथा मह्यं प्रेमामृतमपि ददत्युज्ज्वलमसौ।
यथा श्री गान्धर्व्वाभजनविधये प्रेरयति मां
तदा गोष्ठे काक्वा गिरिधरमिह त्वं भज मनः।।८।।

---

मन! तुम सर्वदा कपट कुटिनाटी रूप क्षरणशील गधे के मूत्र से स्नानकर अपने को और मुझको क्यों जला रहा है? तुम श्री गान्धर्वा गिरिधारी के चरण कमल के प्रेम से प्रकाशित सुधा समुद्र में नित्य स्नान करके अपने को और मुझको सुखी कर॥६॥

मन! निर्लज्जा चण्डालिनी प्रतिष्ठाशा यदि मेरे हृदय में नृत्य करे, तो साधु प्रेम इस हृदय को कैसे स्पर्श करेगा? अतएव तुम प्रभु श्रीकृष्ण के प्रिय अद्वितीय सामन्त की अर्थात् श्री गुरु वैष्णव की सदा सेवा कर, जिससे श्रीकृष्ण उस प्रतिष्ठाशा को शीघ्र निकालकर इस हृदय में उस प्रेम का सञ्चार करेङ्गे॥७॥

मन! इस गोष्ठ में विनती के साथ तुम श्री गिरिधारी की सेवा कर। जिससे श्री गिरिधारी सन्तुष्ट होकर मुझ दुष्ट का भी दुष्ट स्वभाव को दूर कर देङ्गे, प्रेम प्रदान करेंगे एवं श्री राधिका की सेवा करने के

मदीशानाथत्वे व्रजविपिनचन्द्रं व्रजवने-
श्वरीं मन्नाथत्वे तदतुलसखीत्वे तु ललिताम्।
विशाखां शिक्षालीवितरण गुरुत्वे प्रियसरो
गिरीन्द्रौ तत्प्रेक्षा-ललित-रतिदत्वे स्मर मनः।।९
रतिं गौरीलीले अपि तपति सौन्दर्यकिरणैः
शची-लक्ष्मी-सत्याः परिभवति सौभाग्य-वलनैः।
वशीकारैश्चन्द्रावलीमुख-नवीन व्रजसतीः
क्षिपत्याराद् या तां हरिदयितराधां भज मनः।।१०।।
समं श्रीरूपेण स्मर विवश राधागिरिभृतो
व्रजे साक्षात् सेवालभन विधये तद्गण युजोः।

---

लिए मुझको आदेश करेंगे ॥८ ॥

मन! व्रजचन्द्रमा श्रीकृष्ण को मेरी ईश्वरी के अर्थात् श्रीराधा के ईश्वर रूप में, वृन्दावनेश्वरी श्रीराधा को निज ईश्वरी रूप में, ललिता को श्रीराधा की अतुलनीय सखी रूप में, श्री विशाखा को समस्त शिक्षा वितरणकारी गुरुरूप में एवं प्रिय सरोवर श्रीराधाकुण्ड, गिरिराज श्री गोवर्द्धन को श्रीराधाकृष्ण के दर्शन, प्रेम विलास में रतिदायक रूप में तुम चिन्तन कर ॥९ ॥

मन! निज सौन्दर्य के किरण से जो श्रीरतिदेवी, श्रीगौरी देवी, श्रीलीलादेवी को सन्तप्त करती हैं, सौभाग्य वल्लभ की प्रियता की अतिशयता से इन्द्राणी, लक्ष्मी और सत्यभामा को पराजित करती हैं; प्रियतम के वशीकरण के द्वारा चन्द्रावली आदि प्रमुख करुण व्रजललनावृन्द को पराजित करती हैं, उन श्रीकृष्ण प्रेयसी श्रीराधा का भजन कर ॥१० ॥

मन! व्रज में श्रीरूप के साथ एवं सपरिकर कन्दर्प विभोर

तदिज्या ध्यान श्रवण नति पञ्चामृतमिदं
धयन्नीत्या गोवर्द्धनमनुदिनं त्वं भज मनः।।११।।
मनःशिक्षादैकादशकवरमेतन्मधुरया
गिरा गायत्युच्चैः समधिगतसर्व्वार्थतति यः।
सयूथः श्रीरूपानुग इह भवन् गोकुलवने
जनो राधाकृष्णातुलभजनरत्नं स लभते।।१२।।

*इति श्रीमद्रघुनाथदास गोस्वामि-विरचिता श्रीश्रीमनःशिक्षा सम्पूर्णम्।*

---

श्रीराधा गिरिधारी की साक्षात् सेवा प्राप्त करने के उपाय प्राप्ति के उद्देश्य से श्रीराधाकृष्ण की अर्चना, आख्यान, ध्यान, श्रवण और नति— इन पाँच प्रकार के अमृत का पान यथारीति से करते-करते श्रीगोवर्द्धन का भजन कर ॥११॥

सपरिकर श्रीरूप का अनुगत होकर सकल अर्थज्ञान के साथ मनः शिक्षाप्रद सर्वोत्तम एकादश श्लोकों का मधुर स्वर से जो कीर्त्तन करता है, वह इस गोकुल वन में श्रीराधाकृष्ण का अतुलनीय भजन रत्न प्राप्त करता है॥१२॥

*इति श्रीमद्रघुनाथ दास गोस्वामि विरचिता श्रीश्रीमनः शिक्षा सम्पूर्णम्।*

## श्रील रघुनाथदास गोस्वामि विरचितम्

# स्वनियम दशकम्

गुरौ मन्त्रे नाम्नि प्रभुवर-शचीगर्भ्भज पदे
स्वरूपे श्रीरूपे गणयुजि तदीय प्रथमजे।
गिरीन्द्रे गान्धर्व्वासरसि मधुपुर्यां व्रजवने
व्रजे भक्ते गोष्ठालयिषु परमास्तां मम रतिः।।१।।
न चान्यत्र क्षेत्रे हरितनु सनाथेऽपि सुजनाद्
रसास्वादं प्रेम्णा दधदपि वसामि क्षणमपि।
समं त्वेतद्ग्राम्यावलिभिरभितन्वन्नपि कथां
विधास्ये संवासं व्रजभुवन एव प्रतिभवम्।।२।।
सदा राधाकृष्णोच्छलदतुल खेलास्थलयुजं
व्रजं संत्यज्यैतद् युगविरहितोऽपि त्रुटिमपि।

---

श्रीगुरुचरण में, इष्ट मन्त्र में, श्री हरिनाम में, प्रभुवर श्रीशचीनन्दन के श्रीचरणकमलों में, सपरिकर श्रीस्वरूप दामोदर प्रभु, श्रीरूप गोस्वामी प्रभु, श्रीरूपाग्रज श्रीसनातन गोस्वामी प्रभु के चरणों में, गिरिवर श्रीगोवर्द्धन में, श्रीराधाकुण्ड में, श्रीमथुरा धाम में, श्रीवृन्दावन में, श्रीगोष्ठ में, शुद्ध भक्तगण में एवं गोष्ठ निवासी जनों में मेरी अतिशय प्रीति हो॥१॥

किसी भी क्षेत्र में श्रीहरि के श्रीविग्रह विराजित होने पर भी एवं सज्जन वैष्णव सङ्ग प्राप्त होने पर भी वहाँ थोड़ी देर भी नहीं रहुँगा। किन्तु इस व्रजभूमि में ही इन सकल ग्राम्य लोकों के साथ विविध आलाप पूर्वक प्रतिजन्म में वास करुँगा॥२॥

बहुकाल विरही होने पर भी सदा श्रीराधाकृष्ण के अतुलनीय

पुनर्द्वारावत्यां यदुपतिमपि प्रौढ़विभवैः
स्फुरन्तं तद्वाचापि हि नहि चलामीक्षितुमपि।।३।।
गतोन्मादे राधा स्फुरति हरिणा श्लिष्टहृदया
स्फुटं द्वारावत्यामिति यदि शृणोमि श्रुतितटे।
तदाहं तत्रैवोद्धतमपि पतामि व्रजपुरात्
समुड्डीय स्वान्ताधिकगतिखगेन्द्रादपि जवात्।।४।।
अनादिः सादिर्व्वा पटुरतिमृदुर्व्वा प्रतिपद
प्रमीलत्कारुण्यः प्रगुणकरुणाहीन इति वा।
महावैकुण्ठेशाधिक इह नरो वा व्रजपते-
रयं शृणुर्गोष्ठे प्रतिजनि ममास्तां प्रभुवरः।।५।।
अनादृत्योद्गीतामपि मुनिगणैर्वैणिकमुखैः
प्रवीणां गान्धर्व्वामपि च निगमैस्तत् प्रियकथाम्।

---

लीलास्थान युक्त इस व्रजधाम को छोड़कर पूर्ण ऐश्वर्य से दीप्तिमान् श्रीद्वारका को श्रीयदुपति के दर्शन के लिए उनके आदेश से भी थोड़ी देर के लिए भी मैं नहीं जाऊँगा॥३॥

चित्त के उन्माद से श्रीराधा द्वारका में जाकर श्रीकृष्ण के साथ विराज रही हैं, यह सुनकर मैं मन से भी अधिक वेग से, श्रीगरुड़ से भी अति वेग से श्रीवृन्दावन से उड़कर श्रीद्वारका में गिरुँगा॥४

अनादि अथवा आदि, कठिन अथवा अति कोमल, कृपा युक्त अथवा निर्दय इस प्रकार– परमेश्वर श्रीनारायण से अधिक उत्कर्ष युक्त, अथवा सामान्य मनुष्य मात्र हों, इस गोष्ठ में व्रजराजनन्दन प्रतिजन्म में मेरे प्रभु हों॥५॥

वेदादि शास्त्र समूह और श्रीनारदादि मुनिवृन्द जिनको श्रीकृष्ण की भी एकमात्र सर्वश्रेष्ठ प्रियतमा कहे हैं, उन श्रीराधा को अनादर

य एकं गोविन्दं भजति कपटीदाम्भिकतया
तदभ्यणे शीर्णे क्षणमपि न यामि व्रतमिदम्।।६।।
अजाण्डे राधेति स्फुरदभिधया सिक्तजनया-
ऽनया साकं कृष्णं भजति य इह प्रेमनमितः।
परं प्रक्षाल्येतच्चरणकमले तज्जलमहो
मुदा पीत्वा शश्वच्छिरसि च वहामि प्रतिदिनम्।।७।।
परित्यक्तः प्रेयोजनसमुदयैर्वाढ़मसुधी-
र्दुरन्धो नीरन्ध्रं कदनभरवार्द्धौ निपतितः।
तृणं दन्तैर्दष्ट्वा चटुभिरभियाचेऽद्य कृपया
स्वयं श्रीगान्धर्व्वा स्वपदनलिनान्तं नयतु माम्।।८।।
व्रजोत्पन्नक्षीराशनवसनपत्रादिभिरहं
पदार्थैर्निर्वाह्य व्यवहृतिमदम्भं सनियमः।

---

करके जो कपटी व्यक्ति दम्भ से एकक श्रीगोविन्द का भजन करता है, मैं उसके पास मुहूर्त्त के लिए भी नहीं जाऊँगा। यही मेरा व्रत है॥६॥

श्रीराधा नामक उज्ज्वल मुख्य नाम धारिणी और मानववृन्द को प्रेमाप्लुत कारिणी के साथ जो इस ब्रह्माण्ड में श्रीकृष्ण का भजन प्रणत होकर प्रेम से करता है, मैं उसका पादपद्म युगल प्रतिदिन प्रक्षालन करके वह चरणामृत आनन्द से सदा पानकरके मस्तक में धारण करता हूँ॥७॥

श्रीरूप सनातनादि प्रियतम जनवृन्द के द्वारा परित्यक्त, अज्ञ, अतिशय अन्ध, नाना यातनापूर्ण सागर में उपायहीन रूप में निपतित मैं दाँतों से तृण को दबाकर प्रार्थना कर रहा हूँ– स्वयं श्रीराधिका मुझको निज श्रीचरणकमल के समीप में कृपापूर्वक आकर्षण करें॥८॥

व्रजधाम में उत्पन्न दूध आदि, वस्त्र, पत्रादि द्रव्यसमूह के द्वारा दम्भहीन रूप से मैं जीवन यात्रा निर्वाह करके नियम से श्रीराधाकुण्ड,

वसामीशाकुण्डे गिरिकुलवरे चैव समये
मरिष्ये तु प्रेष्ठे सरसि खलु जीवादि पुरतः।।९।।
स्फुरल्लक्ष्मीलक्ष्मीव्रजविजयिलक्ष्मीभरलस-
द्वपुः श्रीगान्धर्व्वास्मरनिकरदीव्यद्‌गिरिभृतोः।
विधास्ये कुञ्जादौ विविधवरिवस्याः सरभसं
रहः श्रीरूपाख्य प्रियतमजनस्यैव चरमः।।१०।।
कृतं केनाप्येतन्निजनियमशंसिस्तवमिमं
पठेद् यो विस्रब्धः प्रिययुगलरूपेऽर्पितमनाः।
दृढ़ं गोष्ठे हृष्टो वसति वसतिं प्राप्य समये
मुदा राधाकृष्णौ भजति सहितेनैव सहितम्।।११।।

*।। इति श्रीस्वनियमदशकं सम्पूर्णम्।।*

श्रीगोवर्द्धन में ही निवास करुँगा। समय आने पर प्रियतम सरोवर श्रीराधाकुण्ड में ही श्रीजीव गोस्वामी आदि के सामने प्राण त्याग करुँगा॥९॥

मैं प्रियतमजन श्रीरूप के पीछे रहकर ही कुञ्जादि में, निर्ज्जन में श्रीलक्ष्मीदेवी में प्रकाशित रूपराशि का पराभवकारी रूप से शोभित श्री राधिका एवं कन्दर्प समूह की भाँति देदीप्यमान श्रीगिरिधारी की विविध सेवा आनन्द से सम्पादन करुँगा॥१०॥

किसी निष्किञ्चन जन के द्वारा रचित निजनियम सूचक स्तव का पाठ जो श्रीराधाकृष्ण के स्वरूप में अथवा प्रेम परायण श्रीरूप आदि में चित्त समर्पण करके विश्वास से करेगा, वह समय पर व्रजधाम में निश्चय ही स्थान प्राप्त करेगा एवं श्रीरूप प्रभु के साथ निश्चय ही आनन्द से श्रीराधाकृष्ण की सेवा करेगा॥११॥

*॥ इति श्रीस्वनियम दशक का अनुवाद समाप्त ॥*

# उपदेशामृतम्

वाचो वेगं मनसः क्रोधवेगं
जिह्वावेगमुदरोपस्थवेगम्
एतान् वेगान् यो विषहेत वीरः
सर्व्वामपीमां पृथिवीं स शिष्यात्।।१।।

अत्याहारः प्रयासश्च प्रजल्पो नियमाग्रहः।
जनसङ्गश्च लौल्यञ्च षड्भिर्भक्तिर्विनश्यति।।२।।

उत्साहान्निश्चयाद्धैर्यात्तत्तत् कर्म्मप्रवर्त्तनात्।
सङ्गत्यागात् सतो वृत्तेः षड्भिर्भक्तिः प्रसीदति।।३।।

---

कटु वाक्य का वेग, मन व क्रोध का वेग, जिह्वा का वेग, उदर व उपस्थ का वेग; इन सब वेगों को सहन अथवा धारण करने में जो व्यक्ति समर्थ है, अर्थात् अयथा कटु वाक्य, क्रोध, लोभ, अधिक भोजन, उपस्थ इन्द्रिय में आसक्ति नहीं करता है, वह वीर व्यक्ति समग्र पृथिवी का आधिपत्य करता है॥१॥

अत्यधिक भोजन, व्यर्थ परिश्रम, असम्बन्ध प्रलाप, भजन का नियम पालन न करना, भगवद् विमुखजन सङ्ग, विषय आदि में व्यक्तिगत भोग लालसा, इन छः आचरणों से भक्ति विनष्ट होती है॥२॥

श्रीभगवत् सेवा कार्य में उत्साह, श्रीभगवतत्त्व ज्ञान, निजकृत कर्म दुर्विपाक से धैर्य, अर्थात् निजकृत कर्म कृत सुख दुःखादि फल भोग से उद्विग्न न होना, सेवानुकूल प्रसिद्ध कर्म समूह का यथावत् अनुष्ठान, श्रीभगवद् विमुख जन सङ्ग त्याग और सदाचार का अनुसरण; इन छः के आचरण से भक्ति देवी हृदय में विराजित होती हैं॥३॥

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम्।।४।।
कृष्णेति यस्य गिरि मनसाद्रियेत
दीक्षास्ति चेत् प्रणतिभिश्च भजन्तमीशम्।
शुश्रूषया भजनविज्ञमनन्यमन्य-
निन्दादिशून्यहृदमीप्सित सङ्गलब्ध्या।।५।।
दृष्टैः स्वभावजनितैर्वपुषस्तु दोषै-
र्न प्राकृतत्वमिह भक्तजनस्य पस्येत्।
गङ्गाम्भसां न खलु वुद्वुद्फेनपङ्कैः
ब्रह्मद्रवत्वमपगच्छति नीरधर्मैः।।६।।

---

प्रिय व्यक्ति को दान करना, उनके पास से ग्रहण करना, गोपनीय कथा पूछना, उनके पास भोजन करना और उनको भोजन कराना ये छः प्रकार के आचरण प्रीति के लक्षण हैं॥४॥

जिनके मुख से श्रीकृष्ण नाम उच्चारित होता है, उनको मन से आदर करना चाहिए। दीक्षित होने पर प्रणति के द्वारा सम्मान करना चाहिए, यदि आत्म समर्पित होकर श्रीप्रभु की सेवा करते हैं तो सेवा के द्वारा उनका आदर करना चाहिए। भजन विषय में परिपक्व, निष्कपट, ऐकान्तिक भावापन्न एवं जिनका हृदय व्यर्थ परनिन्दा दोष दुष्ट नहीं है, इस प्रकार के सज्जन के साथ निरन्तर रहने की आकाङ्क्षा करें॥५॥

गङ्गाजल में बुद्बुद, फेन, पङ्क आदि रहने पर भी गङ्गाजल का ब्रह्मद्रवत्व अर्थात् पवित्रता नष्ट नहीं होती है, उसी प्रकार शरीर के स्वभाव हेतु दोष समूह भक्तजन में दिखने में आने पर भी उनमें प्राकृत बुद्धि नहीं करना चाहिए, कारण वे नित्य पवित्र हैं॥६॥

स्यात् कृष्णनामचरितादि सिताप्यविद्या,
पित्तोपतिक्त रसनस्य न रोचिका नु।
किन्त्वादरादनुदिनं खलु सैव जुष्टा
स्वादी क्रमाद्भवति तद्गदमूल हन्त्री।।७।।

तन्नामरूपचरितादिषु कीर्त्तनानु-
स्मृत्योः क्रमेण रसना मनसी नियोज्य।
तिष्ठन् व्रजे तदनुरागि जनानुगामी
कालं नयेन्निखिलमित्युपदेशसारः।।८।।

वैकुण्ठाज्जनितो वरा मधुपुरी तत्रापि रासोत्सवाद्-
वृन्दारण्यमुदारपाणि-रमणात्तत्रापि गोवर्द्धनः।
राधाकुण्डमिहापि गोकुलपतेः प्रेमामृतप्लावनात्
कुर्यादस्य विराजतो गिरितटे सेवां विवेकी न कः।।९।।

---

अविद्या पित्ततप्त रसनायुक्त व्यक्ति के लिए कृष्ण नाम लीला गुण आदि मिश्री के तरह रुचिकर नहीं होते हैं, किन्तु प्रतिदिन आदर से कृष्णनामादिरूप मिश्री सेवन करते करते वह क्रमशः स्वादु लगने लगता है, एवं अविद्या रूप पित्त रोग का मूल ध्वस्त करता है॥७॥

श्रीकृष्ण नाम रूप लीला आदि के स्मरण कीर्त्तन आदि में मन एवं रसना को नियुक्त करके कृष्णानुरागी जन के अनुगत होकर व्रज में रहकर कालयापन करें। यही समस्त उपदेशों का सार है॥८॥

मथुरा वैकुण्ठ से भी श्रेष्ठ है, उसमें रासोत्सव हेतु श्रीवृन्दावन श्रेष्ठ है, उससे उदारपाणि श्रीगोविन्द के केलि विलास हेतु श्रीगोवर्द्धन श्रेष्ठ हैं, उसमें गोकुलपति श्रीकृष्णचन्द्र के प्रेमामृत प्लावन हेतु श्री राधाकुण्ड श्रेष्ठ है, श्रीगोवर्द्धन गिरि के तट में स्थित श्रीराधाकुण्ड की सेवा कौन विवेकी जन नहीं करता है? ॥९॥

कर्मिभ्यः परितो हरेः प्रियतया ख्यातिं ययुर्ज्ञानिन-
स्तेभ्यो ज्ञानविमुक्तभक्तिपरमाः प्रेमैकनिष्ठा यतः।
तेभ्यस्ताः पशुपालपङ्कजदृशस्ताभ्योऽपि सा राधिका
प्रेष्ठा तद्वदियं तदीयसरसी तां नाश्रयेत् कः कृती।।१०।।

कृष्णस्योच्चैः प्रणयवसतिः प्रेयसीभ्योऽपि राधा-
कुण्डश्चास्या मुनिभिरभित स्तादृगेव व्यधायि।
यत् प्रेष्ठैरप्यलमसुलभं किं पुनर्भक्तिभाजां
तत् प्रेमादः सकृदपि सरः स्नातुराविष्करोति।।११।।

*इति श्रील श्रीजीवगोस्वामि पाद शिक्षार्थं*
*श्रीमद्रूपगोस्वामिपादेनोक्तं श्रीश्रीउपदेशामृतं समाप्तम्।*

---

कर्मियों से ज्ञानी श्रीहरि के प्रिय रूप से प्रसिद्ध हैं। ज्ञानियों से ज्ञानमुक्त-निर्भेद ब्रह्मानुसन्धानहीन भक्ति परायण व्यक्ति श्रेष्ठ हैं, भक्तों में प्रेमनिष्ठ भक्त श्रेष्ठ हैं, इस प्रकार के भक्तों से व्रजाङ्गनागण श्रेष्ठ हैं। उन सबों के मध्य में श्रीराधिका श्रीकृष्ण की सर्वापेक्षा प्रियतमा हैं एवं श्रीराधाकुण्ड भी श्रीकृष्ण को उस प्रकार प्रिय हैं। अतएव कौन सुकृती व्यक्ति श्रीराधाकुण्ड का आश्रय ग्रहण नहीं करेगा? ॥१०॥

श्रीकृष्ण की प्रेयसीवृन्द के मध्य में सर्वश्रेष्ठ प्रिया श्रीराधा हैं तथा श्रीराधाकुण्ड भी उसी प्रकार प्रिय है, मुनिगणों का कथन इस प्रकार है। श्रीकृष्ण के प्रियवृन्द के लिये भी यह श्रीराधाकुण्ड सुलभ नहीं है, साधारण भक्तों की तो बात ही क्या है। श्रीराधाकुण्ड में एक बार मात्र स्नान करने से उस स्नानकारी व्यक्ति को यह श्रीकृष्ण प्रेम प्रदान करते हैं॥११॥

*श्रीउपदेशामृत का श्री श्रीहरिदास शास्त्रिकृत अनुवाद समाप्त।*

# श्रीश्रीउत्कण्ठादशकम्

## श्रीश्रीराधिकायै नमः

छिन्न स्वर्ण विनिन्दि चिक्कण रुचिं स्मेरां वयः सन्धितो,
रम्यां रक्त सुचीन पट्टवसनां वेशेन विभ्राजिताम्।
उद्घूर्णच्छितिकण्ठ पिच्छ विलसद्वेणीं मुकुन्दं मनाक्,
पश्यन्तीं नयनाञ्चलेन मुदितां राधां कदाहं भजे।।१।।
यस्याः कान्त तनूल्लसत् परिमलेनाकृष्ट उच्चैः स्फुरद्,
गोपीवृन्द मुखारविन्द मधु तत्प्रीत्या धयन्नप्यदः।
मुञ्चन् वर्त्मनि वंभ्रमीति मदतो गोविन्द भृङ्गः सताम्
वृन्दारण्य वरेण्य कल्पलतिकां राधां कदाहं भजे।।२।।

---

जिनके अङ्ग की कान्ति सुवर्ण की मनोहर शोभा को भी तिरस्कार कर रही है, जो परम मधुर हास्य युक्ता हैं, वयः सन्धि से जो अति रमणीया हैं, जिनका परिधेय वसन अरुण वर्ण का है, जो अति मनोहर वेश से सुशोभित हैं। मस्तक की वेणी मण्डली बन्धन कौशल से नृत्यशील मयूर की प्रसारित पुच्छश्रेणी की भाँति शोभित है। जो नयन कोण से श्रीमुकुन्द देव के प्रति प्रति ईषत् वङ्किम दृक्पात कर रही हैं, जो अतिशय प्रसन्न अन्तःकरणा हैं, उन श्रीराधा का भजन मैं कब करुँगा ? ॥१ ॥

श्री गोविन्द मधुकर, परमा सुन्दरी व्रजवनितावृन्द के मुखारविन्द का मधुपान अतिशय प्रीति से करने पर भी उसको छोड़कर जिनके कमनीय अङ्ग के प्रफुल्ल परिमल से आकृष्ट होकर मत्तता के कारण पथ पथ में इधर उधर परिभ्रमण कर रहे हैं, वृन्दावन की सर्वश्रेष्ठ कल्प लतिका श्रीराधा की सेवा करने का सौभाग्य मुझको कब प्राप्त होगा ? ॥२

श्रीमत्कुण्डतटी कुडुङ्गभवने क्रीड़ाकलानां गुरुम्,
तल्पे मञ्जुलमल्लि कोमलदलैः क्लिप्ते मुहुर्माधवम्।
जित्वा मानिनमक्ष सङ्गरविधौ स्मित्वा दृगन्तोत्सवैः,
युक्तानां हसितुं सखीः परमहो राधां कदाहं भजे।।३।।
रासे प्रेमरसेन कृष्णविधुना सार्द्धं सखीभिर्वृताम्,
भावैरष्टभिरेव सात्विकतरैर्लास्यं रसैस्तन्वतीम्।
वीणा वेणु-मृदङ्ग किङ्किणिचलन्मञ्जीर चूड़ोच्छलद्,
ध्वानैः स्फीतसुगीतमञ्जु नितरां राधां कदाहं भजे।।४।।
उद्दामस्मरकेलि सङ्गरभरे कामं वनान्तस्थले,
कृष्णेनाङ्कित पीन पर्व्वतकुचद्वन्द्वां नखैरस्त्रकैः।
कन्दर्पेण तथा मदोद्धरमहो तं विद्ध माकुर्व्वतीम्,
दूरे स्वालिकुलैः कृताशिषमहो राधां कदाहं भजे।।५।।

---

परम शोभित श्रीराधाकुण्ड तीर स्थित निकुञ्ज मन्दिर में मनोहर मल्लिका कुसुम की सुकोमल दल निर्मित शय्या में, केलि परायण शिरोमणि दर्पान्वित माधव को पाशा क्रीड़ा समर में पुनः पुनः पराजित करके उपहास करने के लिए जो सहास्य अपाङ्ग भङ्गी से निज सखीवृन्द को नियुक्त कर रही हैं, उन श्रीराधा का भजन मैं कब करुँगा ? ॥३॥

रासलीला में सखीवृन्द परिवेष्टित होकर प्रेम रसिक श्रीकृष्णचन्द्र के साथ अष्ट सात्विक भाव से वीणा, वेणु, मृदङ्ग, किङ्किणी, चञ्चल नूपुर, चूड़ी आदि के उच्छलित शब्द परिपुष्ट सुमधुर गीत के साथ जो रसमय नृत्य विस्तार कर रही हैं, उन श्रीराधा की परिचर्या मैं कब करुँगा ? ॥४॥

श्रीवृन्दाविपिन में उद्दाम कन्दर्पयुद्ध में नखास्त्र के द्वारा श्रीकृष्ण जिनके सुविशाल शैल के समान वक्षोज युगल को चिह्नित करने पर जो

मित्राणां निकरै धृतेन हरिणास्वैरं गिरीन्द्रान्तिके,
शुल्कादानमिषेन वर्त्मनि हठाद्दम्भेन रुद्धाञ्चलाम्।
सार्द्धं स्मेर सखीभिरुद्धुर गिरां भङ्ग्या क्षिपन्तीं रुषा,
भ्रूदर्पैर्विलसच्चकोरनयनां राधां कदाहं भजे।।६।।
पारावार विहार कौतुक मनःपूरेण कंसारिणा
स्फारे मानस जाह्नवी जलभरे तटां समुत्थापिताम्।
जीर्णानौर्मम चेत् स्खलेदिति मिषाच्छाया द्वितीयां मुदा,
पारे खण्डित-कञ्चुलिं धृत कुचां राधां कदाहं भजे।।७।।
उल्लासैर्जलकेलिलोलुप मनःपुरे निदाघोद्गमे,
क्ष्वेलीलम्पटमानसाभिरभितः सायं सखीभिर्वृताम्।

उन्हीं के समान दर्प से मदोन्मत्त श्रीकृष्ण को क्षत विक्षत कर रही हैं, सखीवृन्द उसको दूर से देखकर जिनको आशिष प्रदान कर रही हैं, उन श्रीराधा की परिचर्या मैं कब करुँगा ॥५॥

गोवर्धन के पास पथ में कर ग्रहण छल से सुबलादि सखावृन्द से परिवेष्टित होकर श्रीकृष्णचन्द्र दर्प के साथ सखिवृन्द के साथ सहसा जिनके वसनाञ्चल धारण करने पर जो हास्यमुखी सखीगण के सहित भङ्गी के साथ उनके प्रति उद्धत वाक्य प्रयोग कर रही हैं, एवं उस समय भ्रूक्षेप हेतु जिनके चकोर सदृश नयन युगल चञ्चल हो रहे हैं, मैं उन श्रीराधा की परिचर्या कब करुँगा ? ॥६॥

विस्तृत मानस गङ्गा के जल में पारावार विहार करने की इच्छुक कौतूहलाक्रान्त चित्त होकर कंसरिपु श्रीकृष्ण जिनको पार करने के लिए अकेली नाव में उठाकर छल से "नाव जीर्ण हो गयी है, यदि डूब जाय" इस प्रकार कहने पर जो भीत होकर कञ्चुलिका उन्मोलन करने से श्रीकृष्ण जिनके वक्षःस्थल में हस्त अर्पण किये थे, उन श्रीराधिका का

गोविन्दं सरसि प्रियेऽत्र सलिलक्रीड़ाविदग्धं कणैः,
सिञ्चन्तीं जलयन्त्रकेण पयसां राधां कदाहं भजे।।८।।
वासन्ती कुसुमोत्करेण परितः सौरभ्य विस्तारिणा
स्वेनालङ्कृति सञ्चयेन बहुधाविर्भावितेन स्फुटम्।
सोत्कम्पं पुलकोद्गमैर्मुरभिदा द्राग्भूषिताङ्गीं क्रमै,
मोदेनाश्रुभरैः प्लुतां पुलकितां राधां कदाहं भजे।।९।।
प्राणेभ्योऽप्यधिकप्रियामुररिपोर्या हन्त! यस्या अपि,
स्वीय प्राणपरार्द्धतोऽपि दयितास्तत् पादरेणोः कणाः।
धन्यां तां जगतीत्रये परिलसज्जङ्घालकीर्त्तिं हरेः,
प्रेष्ठावर्गशिरोऽग्रभूषणमणिं राधां कदाहं भजे।।१०।।
उत्कण्ठादशकस्तवेन नितरां नव्येनदिव्यैः स्वरैः,
वृन्दारण्यमहेन्द्रपट्टमहिषीं यः स्तौति सम्यक् सुधीः।

---

भजन मैं कब करुँगा? ॥७॥

निज जल केलि लोलुप चित्त की वासना पूर्त्ति हेतु ग्रीष्मारम्भ के सायंकाल में क्रीड़ा कौतुकाभिलाषिणी सखीवृन्द से वेष्टित होकर श्रीराधाकुण्ड के जल में जलयन्त्र द्वारा जलकेलि विशारद श्रीकृष्ण के प्रति जलकण समूह सेचन कर रही हैं, कब मैं उन श्रीराधा का भजन करुँगा? ॥८॥

पुलकायित कलेवर श्रीकृष्ण के द्वारा कम्पित हस्त से सर्वत्र सौरभ विस्तारकारी वसन्त कुसुमावली एवं निजनिर्मित विविध अलङ्कारों के द्वारा सत्वर सुसज्जित होकर आनन्दाश्रु प्लाविता, परम पुलकिता हो गयी थीं। मैं उन श्रीराधा का भजन कब करुँगा? ॥९॥

श्रीकृष्ण के प्राण समूह से भी जो अति प्रिया हैं। अथच आश्चर्य यह है कि श्रीकृष्ण के पदरज कण जिनके निज कोटि कोटि प्राण से भी

तस्मै प्राणसमागुणानुरसनात् संजातहर्षोत्सवैः,
कृष्णोऽनर्घमभीष्टरत्नमचिरादेतत् स्फुटं यच्छति।।११।।

*इति श्रीमद्रघुनाथदास गोस्वामि-विरचितं*
*श्रीउत्कण्ठादशकं सम्पूर्णम्।*

---

प्रिय हैं, जिनकी कीर्त्तिराशि अति उज्ज्वल है और तीनों लोकों में सुविस्तीर्ण है, एवं जो श्रीकृष्ण प्रेयसीवृन्द के मस्तक स्थित अति उत्कृष्ट भूषण मणि स्वरूप हैं अर्थात् जो श्रीकृष्ण प्रियावृन्द के मध्य में सर्वश्रेष्ठ धन्यतमा हैं, उन श्रीराधा की परिचर्या मैं कब करुँगा ?१०॥

सम्यक् सद्बुद्धि सम्पन्न होकर जो व्यक्ति उच्च स्वर से इस अभिनव उत्कण्ठा दशक स्तोत्र के द्वारा वृन्दावनाधीश्वर श्रीकृष्ण की पट्टमहिषी श्रीराधा का अतिशय स्तव करता है, उस स्तव के द्वारा श्रीकृष्ण प्राणसमा श्रीराधा का गुणास्वादन करके अतिशय आनन्दित होकर शीघ्र श्रीराधिका की सेवा रूप अमूल्य अभीष्ट रत्न उसको प्रदान करते हैं॥११॥

अनुवाद समाप्त॥

।। श्रीश्रीगौरगदाधरौ जयतः।।

# श्रीश्रीअनुरागवल्ली

देहार्व्वुदानि भगवन्! युगपत् प्रयच्छ
वक्त्रार्वुदानि च पुनः प्रतिदेहमेव।
जिह्वार्व्वुदानि कृपया प्रतिवक्त्रमेव
नृत्यन्तु तेषु तव नाथ! गुणार्व्वुदानि।।१।।
किमात्मना यत्र न देह कोट्यो
देहेन किं यत्र न वक्त्र कोट्यः।
वक्त्रेण किं यत्र न कोटि जिह्वाः
किं जिह्वया यत्र न नाम कोट्यः।।२।।

---

भगवन्! कृपा करके मुझे एक समय में अर्व्वुद संख्यक शरीर, प्रति शरीर में अर्व्वुद वदन, प्रति वदन में अर्व्वुद जिह्वा प्रदान करिये, और हे प्रभो! उन अर्व्वुद अर्व्वुद जिह्वा के द्वारा तुम्हारी अर्व्वुद अर्व्वुद गुण राशि कीर्त्तित हो॥१॥

हे प्रभो! जिस आत्मा के कोटि शरीर नहीं है, उस आत्मा का क्या प्रयोजन है? जिस शरीर में कोटि वदन नहीं है, उस शरीर का क्या प्रयोजन? जिस वदन में कोटि जिह्वा नहीं है, उस वदन का क्या फल है? जिस जिह्वा के द्वारा आपके कोटि नामों का उच्चारण नहीं होता है, उस जिह्वा का क्या प्रयोजन? अतएव, हे प्रभो! प्रार्थना करता हूँ, आप मुझे ये सब प्रदान कीजिये॥२॥

आत्मास्तु नित्यं शतदेहवर्त्ती देहस्तु नाथास्तु सहस्र वक्त्रः।
वक्त्रं सदा राजतु लक्ष जिह्वं गृह्णातु जिह्वा तव नाम कोटिम्।।३।।
यदा यदा माधव! यत्र यत्र गायन्ति ये ये तव नाम लीलाः।
तत्रैव कर्णायुतधार्यमाणा स्तास्ते सुधा नित्यमहं धयानि।।४।।
कर्णायुतस्यैव भवन्तु लक्षकोट्यो रसज्ञाभगवंस्तदैव।
येनैव लीलाः शृणुवानि नित्यं तेनैव गायानि ततः सुखं मे।।५।।
कर्णायुतस्येक्षण कोटिरस्याहृत्कोटिरस्या रसनार्व्वुदं स्तात्।
श्रुत्वैव दृष्टा तव रूपसिन्धुमालिङ्गय माधुर्यमहो धयानि।।६।।

हे नाथ! मेरी आत्मा में सौ सौ शरीर हों, प्रति शरीर में सहस्त्र मुख हों, प्रति मुख में लक्ष जिह्वा हो, प्रति जीभ से तुम्हारे कोटि नामों का कीर्त्तन करूँ॥३॥

हे माधव! हे राधाकान्त! तुम्हारे भक्तवृन्द जब भी जहाँ पर तुम्हारे नामलीला का कीर्त्तन करें, तभी जैसे उस स्थान में मैं अयुत कानों से उस कीर्त्तन सुधा का अविरत पान कर सकूँ॥४॥

हे प्रभो! जब उस कर्ण के द्वारा तुम्हारी नाम गुणावली का कीर्त्तनामृत पान करुँगा, तब उस कर्णसमूह में लक्ष कोटि रसना होवे, ऐसा होने पर उन रसनाओं के द्वारा तुम्हारी सुमधुर नाम और लीला का कीर्त्तन करके परम सुख सागर में निमग्न हो सकुँगा॥५॥

हे नाथ! अयुत कर्णों के कोटि नयन हों, कोटि नयनों के कोटि हृदय हों, कोटि हृदयों को अर्व्वुद रसना हों और उन अयुत कर्णों से मैं तुम्हारी अपरूप रूप सागर की कथा श्रवण करूँ, कोटि कोटि नयनों से रूप दर्शन करूँ। करोड़ों करोड़ों हृदयों से उन सबका स्पर्श करूँ, एवं अर्व्वुद जिह्वाओं से उन सबका माधुर्य पान करूँ॥६॥

नेत्रार्व्वुदस्यैव भवन्तु कर्णनासाररसज्ञा हृदयार्व्वुदम्वा।
सौन्दर्य सौश्वर्य सुगन्धपुरमाधुर्य संश्लेष रसानुभूत्यै।।७।।

तत्पार्श्वगत्यै पदकोटिरस्तु
सेवां विधातुं मम हस्त कोटिः।
तां शिक्षितुं स्तादपि बुद्धि कोटि-
रेतान् वरान् मे भगवन्! प्रयच्छ।।८।।

*इति श्रीमद् विश्वनाथ चक्रवर्त्ति ठक्कुर विरचित स्तवामृतलहर्यां श्रीश्रीअनुरागवल्ली समाप्तम्।।*

---

हे प्रभो! तुम्हारे सौन्दर्यामृत पान करने के लिए मेरे अर्व्वुद नयन हों, तुम्हारे सुमधुर कण्ठ ध्वनि श्रवण करने के लिए मेरे अर्व्वुद कर्ण हों, तुम्हारे श्रीअङ्ग का सौरभ ग्रहण करने के लिए मेरी अर्व्वुद नासिकायें हों, तुम्हारे रूप गुणादि के माधुर्यास्वादन हेतु मेरी अर्व्वुद रसनायें हों, एवं तुम्हें स्पर्श करने के लिए मेरे अर्व्वुद हृदय हों॥७॥

हे भगवन्! मुझे यह वर प्रदान करो, तुम्हारे पास जाने के लिए मेरे कोटि चरण हों, तुम्हारी सेवा करने के लिए मेरे कोटि हस्त हों, एवं उस सेवा कार्य को सुन्दर रूप से करने के लिए शिक्षा देने के लिए मेरी कोटि बुद्धियां हों॥८॥

*॥ श्री अनुरागवल्लीका अनुवाद समाप्त ॥*

# श्रीहरिदास शास्त्री सम्पादित ग्रन्थावली

(श्रीगदाधरगौरहरि प्रेस से प्रकाशित)

| क्रम सद्ग्रन्थ | मूल्य |
|---|---|
| १-वेदान्तदर्शनम् भागवतभाष्योपेतम् | १५०.०० |
| २-श्रीनृसिंह चतुर्दशी | १०.०० |
| ३-श्रीसाधनामृतचन्द्रिका | २०.०० |
| ४-श्रीगौरगोविन्दार्चनपद्धति | २०.०० |
| ५-श्रीराधाकृष्णार्चनदीपिका | २०.०० |
| ६-७-८-श्रीगोविन्दलीलामृतम् | ४५०.०० |
| ९-ऐश्वर्यकादम्बिनी | ३०.०० |
| १०-श्रीसंकल्पकल्पद्रुम | ३०.०० |
| ११-१२-चतु:श्लोकीभाष्यम्, श्रीकृष्णभजनामृत | ३०.०० |
| १३-प्रेम सम्पुट | ४०.०० |
| १४-श्रीभगवद्भक्तिसार समुच्चय | ३०.०० |
| १५-ब्रजरीतिचिन्तामणि | ४०.०० |
| १६-श्रीगोविन्दवृन्दावनम् | ३०.०० |
| १७-श्रीकृष्णभक्तिरत्नप्रकाश | ५०.०० |
| १८-श्रीहरेकृष्णमहामन्त्र | ५.०० |
| १९-श्रीहरिभक्तिसारसंग्रह | ५०.०० |
| २०-धर्मसंग्रह | ५०.०० |
| २१-श्रीचैतन्यसूक्तिसुधाकर | १०.०० |
| २२-श्रीनामामृतसमुद्र | १०.०० |
| २३-सनत्कुमारसंहिता | २०.०० |

| | |
|---|---|
| २४-श्रुतिस्तुति व्याख्या | १००.०० |
| २५-रासप्रबन्ध | ३०.०० |
| २६-दिनचन्द्रिका | २०.०० |
| २७-श्रीसाधनदीपिका | ६०.०० |
| २८-स्वकीयात्वनिरास, परकीयात्वनिरूपणम् | १००.०० |
| २९-श्रीराधारससुधानिधि (मूल) | २०.०० |
| ३०-श्रीराधारससुधानिधि (सानुवाद) | १००.०० |
| ३१-श्रीचैतन्यचन्द्रामृतम् | ३०.०० |
| ३२-श्रीगौरांग चन्द्रोदय | ३०.०० |
| ३३-श्रीब्रह्मसंहिता | ५०.०० |
| ३४-भक्तिचन्द्रिका | ३०.०० |
| ३५-प्रमेयरत्नावली एवं नवरत्न | ५०.०० |
| ३६-वेदान्तस्यमन्तक | ४०.०० |
| ३७-तत्वसन्दर्भः | १००.०० |
| ३८-भगवत्सन्दर्भः | १५०.०० |
| ३९-परमात्मसन्दर्भः | २००.०० |
| ४०-कृष्णसन्दर्भः | २५०.०० |
| ४१-भक्तिसन्दर्भः | ३००.०० |
| ४२-प्रीतिसन्दर्भः | ३००.०० |
| ४३-दशःश्लोकी भाष्यम् | ६०.०० |
| ४४-भक्तिरसामृतशेष | १००.०० |
| ४५-श्रीचैतन्यभागवत | २००.०० |
| ४६-श्रीचैतन्यचरितामृतमहाकाव्यम् | १५०.०० |
| ४७-श्रीचैतन्यमंगल | १५०.०० |

| | |
|---|---|
| ४८-श्रीगौरांगविरुदावली | ४०.०० |
| ४९-श्रीकृष्णचैतन्यचरितामृत | १५०.०० |
| ५०-सत्संगम् | ५०.०० |
| ५१-नित्यकृत्यप्रकरणम् | ५०.०० |
| ५२-श्रीमद्भागवत प्रथम श्लोक | ३०.०० |
| ५३-श्रीगायत्री व्याख्याविवृति: | १०.०० |
| ५४-श्रीहरिनामामृत व्याकरणम् | २५०.०० |
| ५५-श्रीकृष्णजन्मतिथिविधि: | ३०.०० |
| ५६-५७-५८-श्रीहरिभक्तिविलास: | ६००.०० |
| ५९-काव्यकौस्तुभ: | १००.०० |
| ६०-श्रीचैतन्यचरितामृत | २५०.०० |
| ६१-अलंकारकौस्तुभ | २५०.०० |
| ६२-श्रीगौरांगलीलामृतम् | ३०.०० |
| ६३-शिक्षाष्टकम् | १०.०० |
| ६४-संक्षेप श्रीहरिनामामृत व्याकरणम् | ८०.०० |
| ६५-प्रयुक्ताख्यात मंजरी | २०.०० |
| ६६-छन्दो कौस्तुभ | ५०.०० |
| ६७-हिन्दुधर्मरहस्यम् वा सर्वधर्मसमन्वय: | ५०.०० |
| ६८-साहित्य कौमुदी | १००.०० |
| ६९-गोसेवा | ४०.०० |
| ७०-पवित्र गो | ५०.०० |
| ७१-गोसेवा (गोमांसादि भक्षण विधिनिषेध विवेचन) | ५०.०० |
| ७२-रस विवेचनम् | ५०.०० |
| ७३-अहिंसा परमो धर्म: | ११०.०० |
| ७४-भक्ति सर्वस्वम् | ५०.०० |

## बंगाक्षर में मुद्रित ग्रन्थ

| | |
|---|---|
| १-श्रीबलभद्रसहस्रनाम स्तोत्रम् | १०.०० |
| २-दुर्लभसार | १०.०० |
| ३-साधकोल्लास | ५०.०० |
| ४-भक्तिचन्द्रिका | ४०.०० |
| ५-श्रीराधांरससुधानिधि (मूल) | २०.०० |
| ६-श्रीराधारससुधानिधि (सानुवाद) | ३०.०० |
| ७-श्रीभगवद्भक्तिसार समुच्चय | ३०.०० |
| ८-भक्तिसर्वस्व | ३०.०० |
| ९-मन:शिक्षा | ३०.०० |
| १०-पदावली | ३०.०० |
| ११-साधनामृतचन्द्रिका | ४०.०० |
| १२-भक्तिसंगीतलहरी | २०.०० |

## अंग्रेजी भाषा में मुद्रित ग्रन्थ

| | |
|---|---|
| १-पद्यावली (Padyavali) | २००.०० |
| २-गोसेवा (Goseva) | ५०.०० |
| ३-पवित्र गो (The Pavitra Go) | ८०.०० |
| ४-A Review of "Beef in ancient India | २००.०० |

## अन्य भाषाओं में मुद्रित ग्रन्थ

१- Pavitra Go (Spanish)

२- Goseva Pavitra Go (Italian)

३-गोसेवा (गोमांसादि भक्षण विधिनिषेध विवेचन) (तमिल)

॥श्रीहरि:॥



श्रीहरिदास शास्त्री

संस्थापक एवं अध्यक्ष -

**श्रीहरिदास शास्त्री गोसेवा संस्थान**

श्रीहरिदास निवास, पुरानी कालीदह

वृन्दावन, मथुरा (उ. प्र.)